क्षिपदशस्तिमप दुर्मतिं हन्नथा करद्यजमानाय शं योः ॥ 2 ॥
तपुर्मूर्धा तपतु रक्षसो ये ब्रह्मद्विषः शरवे हन्तवा उ ।
क्षिपदशस्तिमप दुर्मतिं हन्नथा करद्यजमानाय शं योः ॥ 3 ॥

(3) **183** (म.10, अनु.12)

| ऋषिः प्रजावान् प्राजापत्यः | छन्दः त्रिष्टुप् | देवता यजमानः **1,** यजमानपत्नी **2,** होत्राशिषः **3** |
|---|---|---|

अपश्यं त्वा मनसा चेकितानं तपसो जातं तपसो विभूतम् ।
इह प्रजामिह रयिं रराणः प्र जायस्व प्रजया पुत्रकाम ॥ 1 ॥
अपश्यं त्वा मनसा दीध्यानां स्वायां तनू ऋत्व्ये नाधमानाम् ।
उप मामुच्चा युवतिर्बभूयाः प्र जायस्व प्रजया पुत्रकामे ॥ 2 ॥
अहं गर्भमदधामोषधीष्वहं विश्वेषु भुवनेष्वन्तः ।
अहं प्रजा अजनयं पृथिव्यामहं जनिभ्यो अपरीषु पुत्रान् ॥ 3 ॥

(3) **184** (म.10, अनु.12)

| ऋषिः विष्णुः प्राजापत्यः, त्वष्टा गर्भकर्ता वा | छन्दः अनुष्टुप् |
|---|---|
| देवता विष्णु-त्वष्ट्-प्रजापति-धातारः **1,** सिनीवाली-सरस्वत्यश्विनः **2,** अश्विनौ **3** | |

विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु । आ सिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥ 1 ॥
गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति । गर्भं ते अश्विनौ देवावा धत्तां पुष्करस्रजा ॥ 2 ॥
हिरण्ययी अरणी यं निर्मन्थतो अश्विना । तं ते गर्भं हवामहे दशमे मासि सूतवे ॥ 3 ॥

(3) **185** (म.10, अनु.12)

| ऋषिः सत्यधृतिः वारुणिः | छन्दः गायत्री | देवता आदित्यः |
|---|---|---|

महि त्रीणामवोऽस्तु द्युक्षं मित्रस्यार्यम्णः । दुराधर्षं वरुणस्य ॥ 1 ॥
नहि तेषाममा चन नाध्वसु वारणेषु । ईशे रिपुरघशंसः ॥ 2 ॥
यस्मै पुत्रासो अदितेः प्र जीवसे मर्त्याय । ज्योतिर्यच्छन्त्यजस्रम् ॥ 3 ॥

(3) **186** (म.10, अनु.12)

| ऋषिः उलः वातायनः | छन्दः गायत्री | देवता वायुः |
|---|---|---|

वात आ वातु भेषजं शंभु मयोभु नो हृदे । प्र ण आयूँषि तारिषत् ॥ 1 ॥
उत वात पितासि न उत भ्रातोत नः सखा । स नो जीवातवे कृधि ॥ 2 ॥
यददो वात ते गृहे३मृतस्य निधिर्हितः । ततो नो देहि जीवसे ॥ 3 ॥

(5) **187** (म.10, अनु.12)

| ऋषिः वत्सः आग्नेयः | छन्दः गायत्री | देवता अग्निः |
|---|---|---|

प्राग्नये वाचमीरय वृषभाय क्षितीनाम् । स नः पर्षदति द्विषः ॥ 1 ॥
यः परस्याः परावतस्तिरो धन्वातिरोचते । स नः पर्षदति द्विषः ॥ 2 ॥
यो रक्षांसि निजूर्वति वृषा शुक्रेण शोचिषा । स नः पर्षदति द्विषः ॥ 3 ॥
यो विश्वाभि विपश्यति भुवना सं च पश्यति । स नः पर्षदति द्विषः ॥ 4 ॥
यो अस्य पारे रजसः शुक्रो अग्निरजायत । स नः पर्षदति द्विषः ॥ 5 ॥

(3) **188** (म.10, अनु.12)

| ऋषिः श्येनः आग्नेयः | छन्दः गायत्री | देवता जातवेदाः अग्निः |
|---|---|---|

प्र नूनं जातवेदसमश्वं हिनोत वाजिनम् । इदं नो बर्हिरासदे ॥ 1 ॥
अस्य प्र जातवेदसो विप्रवीरस्य मीळ्हुषः । महीमियर्मि सुष्टुतिम् ॥ 2 ॥
या रुचो जातवेदसो देवत्रा हव्यवाहनीः । ताभिर्नो यज्ञमिन्वतु ॥ 3 ॥

(3) **189** (म.10, अनु.12)

| ऋषिः सार्पराज्ञी | छन्दः गायत्री | देवता आत्मा सूर्यः वा |
|---|---|---|

आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः । पितरं च प्रयन्त्स्वः ॥ 1 ॥
अन्तश्चरति रोचनास्य प्राणादपानती । व्यख्यन्महिषो दिवम् ॥ 2 ॥
त्रिंशद्धाम वि राजति वाक्पतङ्गाय धीयते । प्रति वस्तोरह द्युभिः ॥ 3 ॥

(3) **190** (म.10, अनु.12)

| ऋषिः अघमर्षणः माधुच्छन्दसः | छन्दः अनुष्टुप् | देवता भाववृत्तम् |
|---|---|---|

ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत । ततो रात्र्यजायत ततः समुद्रो अर्णवः ॥ 1 ॥
समुद्रादर्णवादधि संवत्सरो अजायत । अहोरात्राणि विदधद्विश्वस्य मिषतो वशी ॥ 2 ॥
सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् । दिवं च पृथिवीं चान्तरिक्षमथो स्वः ॥ 3 ॥

(4) **191** (म.10, अनु.12)

| ऋषिः संवननः आङ्गिरसः | छन्दः अनुष्टुप् 1-2,4, त्रिष्टुप् 3 | देवता अग्निः 1, संज्ञानम् 2-4 |
|---|---|---|

संसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ । इळस्पदे समिध्यसे स नो वसून्या भर ॥ 1 ॥
सं गच्छध्वं सं वदध्वं सं वो मनांसि जानताम्। देवा भागं यथा पूर्वे संजानाना उपासते ॥ 2 ॥
समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषाम् ।
समानं मन्त्रमभि मन्त्रये वः समानेन वो हविषा जुहोमि ॥ 3 ॥
समानी व आकूतिः समाना हृदयानि वः । समानमस्तु वो मनो यथा वः सुसहासति ॥ 4 ॥

। इति अष्टमाष्टके अष्टमोऽध्यायः समाप्तः ।

। इति अष्टमोऽष्टकः समाप्तः ।

। इति दशमं मण्डलं समाप्तम् ।

। **ऋग्वेदसंहिता समाप्ता** ।